अकम्पनवचः श्रुत्वा रावणो राक्षसाधिपः ।
स मारीचाश्रमं प्राप्य ताटकेयमुपागमत् ॥

मारीचोपदेशेन लङ्काप्रवेशः ।

एवमुक्तो दशग्रीवो मारीचेन स रावणः ।
न्यवर्तत पुरीं लङ्कां प्रविवेश गृहोत्तमम् ॥ 3 31 50

ततः शूर्पणखावाक्यश्रवणात् तत्करणीयचिन्ता—

ततः शूर्पणखावाक्यं तच्छ्रुत्वा रोमहर्षणम् ।
सचिवानभ्यनुज्ञाय कार्यं बुद्ध्वा जगाम सः ॥ 3 35 1

पुनश्च रावणस्य मारीचाश्रमगमनम्। तदानीं वैशाखमास इत्यत्र ज्ञापकम्—

मुक्तानां च समूहानि शुष्यमाणानि तीरतः ।
शङ्खानां प्रस्तरं चैव प्रवालनिचयं तथा ॥ 3 35 23,24

मारीचोपदेशः ।

सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ 3 37 2

इत्यादिमारीचवाक्यं नाङ्गीकृत्य मायामृगरूपेण मारीचेन सह श्रीरामाश्रमप्राप्तिपर्यन्तं श्रीरामस्य पञ्चवटीवासः पञ्चादिनोन(दिनोत्तर)चतुर्दशमासाः। तदानीमेव ज्येष्ठशुक्लप्रतिपदि सीताहरणम्। ततो युवसंवत्सरचैत्रशुद्धप्रतिपत्पर्यन्तं सीतादेव्या दशमाससम्मितो लङ्कावासः। तथा हनुमन्तं प्रति सीतावाक्यम्—

वर्तते दशमो मासो द्वौ तु शेषौ प्लवङ्गम ।
रावणेन नृशंसेन समयो यः कृतो मम ॥ 5.37 8

तदानीं फाल्गुनत्वात् हरणवेलाया ज्येष्ठमिति सिद्धम्। तदानीं श्रीरामस्य केतुदशारम्भः। तथा हि—जननवेलायां पुनर्वसुनक्षत्रे चतुर्थपादे चतुर्थभा-

गत्वात् बृहस्पतिदशायामेकवर्षम् । ततः शनिदशायामेकोनविंशतिः । बुधदशायां सप्तदश । ततः केतुदशारम्भवेलायां श्रीरामस्य अष्टात्रिंशे वर्षे सीताहरणम् । तथा कबन्धवाक्यम्—

राम षड्युक्तयो लोके याभिः सर्वं विमृश्यते । 3 72 8
तासां विमर्शने न्याय्ये मार्गेण हितयोर्द्वयोः ॥

परिमृष्टो दशान्तेन दशाभागेन सेव्यते । 3 72 8
दशाभागगतो हीनस्त्वं हि राम सलक्ष्मणः ॥ 3-72 9

ततः शबरीदर्शनम् । ततः पम्पातीरवासः । अत्र शङ्क्यते ।

अयं वसन्तः सौमित्रे नानाविहगनादितः ।
सीतया विप्रहीणस्य शोकसन्दीपनो मम ॥ 4 1 22

इति वसन्तवर्णनस्य दृश्यमानत्वात् कथं ज्येष्ठ इत्युच्यते इति चेत् सत्यम् । 'माघाद्याः पञ्च वसन्ताः' इति ज्येष्ठमासस्यापि वसन्तत्वमुपपद्यत इति नैष दोषः । तस्माज्ज्येष्ठशुक्लप्रतिपद्येव सीताहरणम् । तत्कृष्णप्रतिपदि हनुमद्दर्शनम् । पञ्चदशदिनोत्तरत्रयोदशवार्षिकचरितप्रतिपादक आरण्यकाण्डः ॥

ततः सुग्रीवसख्यम् । सालखण्डनादिप्रत्ययोत्पादनवालिवधसुग्रीवपट्टाभिषेकपर्यन्तं आषाढमासः । ततः श्रावणादिवार्षिकमासेषु गुहावासः ।

तथा—

पूर्वोऽयं वार्षिको मासः श्रावणः सलिलागमः । 4 26 13
प्रवृत्ताः सौम्य चत्वारो मासा वार्षिकसंज्ञिकाः ॥ 4 26 14

किं च—

इयं गिरिगुहा रम्या विशाला युक्तमारुता । 4 26 15
अस्यां वसाम सौमित्रे वर्षरात्रमरिन्दम ॥ इति । 4 27 7

कार्तिकान्तं गुहावासः । एतदर्वागेव शरत्कालवर्णनम् । शरदागमनवेलाया-
माश्वयुजमासे हनुमता सुग्रीवप्रबोधनम् । तथा—

समीक्ष्य विमलं व्योम गतविद्युद्वलाहकम् ।
सारसारवसंघुष्टं रम्यज्योत्स्नानुलेपनम् ॥ 4 29·1

अत्यर्थमसतां मार्गमेकान्तगतमानसम् । 4 29 2
निवृत्तकार्यं सिद्धार्थं प्रमदाभिरत सदा ॥ 4 29 3

इत्यादि—

हरीश्वरमुपागम्य हनुमान् वाक्यमब्रवीत् । 4 29 9

इत्यादि ।

तस्य त्वं कुरु वै कार्यं पूर्वं तेन कृतं तव ॥ 4 29 18

हरीश्वर हरिश्रेष्ठानाज्ञापयितुमर्हसि । 4 29 19
तस्य तद्वचनं श्रुत्वा काले साधु निवेदितम् ॥

सुग्रीव सत्वसम्पन्नश्चकार मतिमुत्तमाम् ।
स सन्दिदेशाभिमतं नीलं नित्यकृतोद्यमम् ।
दिक्षु सर्वासु सर्वेषां सैन्यानामुपसंग्रहे ॥ 4 29·28-30

एतत्प्रथमारम्भसमयमभिप्रेत्यैवोत्तरत्राङ्गदवाक्यम्—

वयमाश्वयुजे मासि कालसङ्ख्याव्यवस्थिताः ।
प्रस्थिताः सोऽपि चातीतः किमतः कार्यमुत्तरम् ॥ 4·53 22

अन्यथा मार्गशीर्षमासे प्रस्थितानां कथमेतत्सम्भवति । तथा हि—

अतीतान् चतुरो मासान् विहरन्नावबुद्ध्यते । 4 30·78, 4·4 33·
सामात्यपरिषत् क्रीडन् पानमेवोपसेवते ॥ इति । 4 30 79

श्रीरामवाक्यं निशम्य लक्ष्मणेन—

न वानरः स्थास्यति साधुवृत्ते न मंस्यते कर्मफलानुषङ्गान् ।
न भोक्ष्यते वानरराजलक्ष्मीं तथा हि नाभिक्रमतेऽस्य बुद्धिः ॥ 4 31

इत्यादि—

हतोऽग्रजं पश्यतु वीर वालिनं न राज्यमेवं विगुणस्य देयम् । 4

इत्यादि श्रीरामसन्निधौ बहूक्त्वा, ततः श्रीरामेण शमितकोपः किष्किन्धाद्वारमागम्य ज्याध्वनिकरणात्तदागमनमङ्गदादिभिरुपश्रुत्य तारया शमितकोपेन लक्ष्मणेन मिलित्वा ततो हनूमन्तं प्रति सुग्रीववचनम्—

प्रेषिता प्रथमं ये च मया दूता महाजवाः ।
त्वरणार्थं तु भूयस्त्वं हरीन् संप्रेषयापरान् ॥ 4 37.10

किं च—

त्रिपञ्चरात्रादूर्ध्वं यो नागच्छति ममाज्ञया ।
तस्य प्राणान्तिको दण्डो नात्र कार्या विचारणा ॥ 4 29.33

इत्युक्त्वा अतिवेगात्ततो वानरान् प्रेषितवान् । ते च त्वरया गत्वा तत्तत्स्थानात्प्राप्य त्वरया घटिकाद्वयेन प्राप्ताः ।

प्रयाता प्रहिता राज्ञा हरयस्तत्क्षणेन तु । 4 37 17
ते तु तेन मुहूर्तेन यूथपाः शीघ्रगामिनः ॥
किष्किन्धां त्वरया प्राप्ताः सुग्रीवो यत्र वानरः । 4 37 34

इति सुग्रीवलक्ष्मणसंवादवेलाया किष्किन्धायां घटिकाद्वयेन आगता दूताः । ततो लक्ष्मणसुग्रीवावुभावपि एकामान्दोलिकामारुह्य श्रीरामसमीपमागच्छताम् । सुग्रीवः तत्क्षणादेव नानादिग्भ्य आगतान् सर्वान् वानरान् श्रीरामाय निवेद्य ततो यूथपतीनां चतुर्दिशनिवेदनं कृत्वा मार्गशिरोऽन्ते—

मासे पूर्णे निवर्तध्वमुदयं प्राप्य पर्वतम् ।
ऊर्ध्वं मासान्न वस्तव्यं वसन् वध्यो भवेन्मम ॥ 4 . . 69, 70

इति पुष्यमासमवधिं कृत्वा प्रेषितवान् । ते च स्वां स्वां दिशमभिप्रेत्य गत्वा सर्वं विचित्य मासे पूर्णे पूर्वोत्तरपश्चिमदिश्याः सर्वेऽप्यागताः । ततो दक्षिणदिशागतानां हनुमदादीनां वृत्तान्तः कथ्यते ।

सर्वतो विन्ध्यं विचित्य कुत्रापि सीतामदृष्ट्वा अतिखिन्नान् वानरान् प्रत्यङ्गदवाक्यम्—

कालश्च नो महान् यातः सुग्रीवश्चोग्रशासनः । 4 49 4

किं च—

आसेदुर्वानरास्तत्र कोटिं दक्षिणपश्चिमम् ।
तेषां तत्रैव वसतां स कालो व्यत्यवर्तत ॥ 4 50 3

इति विन्ध्यपर्वत एव पुष्यमासो गतः । तथा हनुमद्वाक्यम्—

यः कृतः समयोऽस्मासु सुग्रीवेण महात्मना ।
स तु कालो व्यतिक्रान्तः बिले च परिवर्तताम् ॥ 4 53 23

इति पुष्यमासान्ते बिलप्रवेशः । तत्र माघमासः पूर्णः । तथा—

मासः पूर्णो बिलस्थानां हरयः किं न बुद्ध्यत । 4 53 21

इति अङ्गदवाक्यम् । 'यो राज्ञा समयः कृतः' इत्यनेन 'स तु कालो व्यतिक्रान्तः बिले च परिवर्तता'मित्यनेन च पुष्यमास इति न शङ्कनीयम् ।

ते वसन्तमनुप्राप्तं प्रतिबुद्ध्वा परस्परम् ।
नष्टसन्देशकार्यार्था निपेतुर्धरणीतले ॥ 4 53 18

इत्युक्तत्वात् । न च 'माघाद्याः पञ्च वसन्ताः' इति माघस्यापि वासन्तिकत्वमेवेति वाच्यम् । 'मासः पूर्णो बिलस्थाना'मित्यनेन, 'तेषां तत्रैव वसतां स कालो व्यत्यवर्तत' इत्यनेन च गतः पुष्यमासः, बिले च माघमास इति
सिद्धम् । किं च, 'मयस्य मायाविहित'मित्यस्मिन् श्लोके अपिशब्दस्य 4 53 1 4 57.
विद्यमानत्वात् राज्ञा यः समयः कृतः स च अन्योऽप्यतीत इत्यर्थः । ततो 17,18
बिलादागत्य पुनरपि विन्ध्ये कश्चित्कालो गतः । तथा हि—

तेषां नो विप्रवि(न)ष्टानां विन्ध्ये पर्वतसत्तमे ।
भृशं शोकपरीतानामहोरात्रगणा गताः ॥ 5 35 57

इति फाल्गुनशुद्धद्वादशीपर्यन्तं प्रायोपवेशनसम्पातिदर्शनादि । एवं सप्तविंशतिदिनोत्तराष्टमासचरितप्रतिपादकः किष्किन्धाकाण्डः समाप्तः ।

ततः फाल्गुनशुद्धत्रयोदश्यां प्रातः महेन्द्रादवप्लुत्य मध्ये क्वापि नस्थित्वा नागमातरमप्युपायेन जित्वा छाया . . मिकां संहृत्य दिवि पञ्चविंशघटिकायामेव लङ्काप्रवेशः । तथा मैनाकं प्रति हनुमद्वाक्यम्—

त्वरते कार्यकालो मे अहश्चाप्यतिवर्तते ।
प्रतिज्ञा च मया दत्ता न स्थातव्यमिहान्तरा ॥ 5 1 131,132

इति क्वापि नस्थित्वा लङ्कां प्राप्य —

इति सञ्चिन्त्य मनसा सूर्यस्यास्तमयं कपिः ।
आचकाङ्क्षे तदा वीरो वैदेह्या दर्शनोत्सुकः ॥ 5 2 48

इति प्रदोषपर्यन्तं बहिः स्थित्वा ततो लङ्कादेवीं विजित्य रात्रौ लङ्कां प्रविष्टः।

स निर्जित्य पुरीं श्रेष्ठां लङ्कां तां कामरूपिणीम् ।
विक्रमेण महातेजा हनुमान् हरिसत्तमः ॥ 5.4 1
सूर्ये चास्तं गते रात्रौ देहं संक्षिप्य मारुतिः । 5.2.49
प्रदोषकाले हनुमान् तूर्णमाप्लुत्य वीर्यवान् ॥
प्रविवेश पुरीं लङ्कां सुविभक्तमहापथाम् । 5 2.50

इति रात्रौ लङ्काप्रवेशः । तदानीमेव चन्द्रप्रकाशः, शुक्लपक्षत्वात् । तथा-

चन्द्रोऽपि साचिव्यमिवास्य कुर्वन् तारागणैर्मध्यगतो विराजन् ।
ज्योत्स्नावितानेन वितत्य लोकमुत्तिष्ठते नैकसहस्ररश्मिः ॥ 5 2.57

अत्रोत्तिष्ठतीत्यनेन उदय इति न शङ्कनीयम् । उत्तिष्ठति उपर्युपरि उद्गच्छतीत्यर्थः । त्रयोदश्यां दिवि पञ्चविंशघटिकायामेव उदितत्वात् । तथोत्तरत्र श्रूयते ।

शङ्खप्रभं क्षीरमृणालवर्णमुद्गच्छमानं व्यवभासमानम् ।
ददर्श चन्द्रं स कपिप्रवीरः पोप्लूयमानं सरसीव हंसम् ॥ 5 2.58

अत्र धवलत्वपोप्लूयमानत्वादिधर्मवर्णनेन पूर्वमेवोदित इति प्रतिभाति ।

दीक्षितान् जटिलान् मुण्डान् गोऽजिनाम्बरवाससः । 5 4 15
स्वाध्यायनिरतांश्चैव यातुधानान् ददर्श सः ॥ 5 4 13

इति पूर्वरात्रप्रयुक्ताग्निहोत्रस्वाध्यायादिवर्णनात् । तदानीमेव ।

ततः स मध्यं गतमंशुमन्तं ज्योत्स्नावितानं महदुद्वमन्तम् ।
ददर्श धीमान् भुवि भानुमन्तं गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥ 5 5 1

इति वर्ण्यते । अपि च—

प्रकाशचन्द्रोदयनष्टदोषः प्रवृद्धरक्षःपिशिताशदोषः । 5·5 8
रामाभिरामेरितचित्तदोषः स्वयं प्रकाशो भगवान् प्रदोषः । not wrong

इति प्रदोषवर्णनमपि श्रूयते । तस्मात्तदा दर्शितैर्व्यङ्ग्यै त्रयोदशीति सिद्धम् । एवं रात्रौ लङ्कां प्रविशन् प्रहस्तादिसकलराक्षसगृहान् विचित्य सर्वत्रादृष्ट्वा पुनरपि रावणगृहमागत्य तत्रापि सर्वतो विचित्य तत्राप्यदृष्टवान् । अशोकवनिकाप्रवेशकाले अपररात्रि । तथा—

विचिन्वतश्च वैदेहीं किंचिच्छेषा निशाऽभवत् । 5 18 1
षडङ्गवेदविदुषां क्रतुप्रवरयाजिनाम् ॥
शुश्राव ब्रह्मघोषांश्च विरात्रे ब्रह्मरक्षसाम् । 5 18 2

तदानीमशोकवनिकायां शिंशपारोहणदेवीदर्शनादि । ततो रावणागमनदेवीतर्जनदेवीप्रलापत्रिजटास्वप्नदर्शनादि । एतत्सर्वमप्यपररात्रे दृष्ट्वा राक्षसीषु पुनः सुप्तासु वृक्षादवतीर्य वृत्तान्तविज्ञापनार्थं देवीसमीपं गतः । तथा—

सोऽवतीर्य द्रुमात्तस्मात् विद्रुमप्रतिमाननः ।
विनीतवेषः कृपणः प्रणिपत्योपसृत्य च ॥ 5 33 1

ततो देव्याः प्रत्ययमुत्पाद्य अङ्गुलीयकमपि दत्वा चूडामणिमपि गृहीत्वा, वनभङ्गं कृत्वा, किङ्करान् हत्वा चतुर्दश्यामुदयकाले प्रासादं विध्वंसितवान् ।

आरुह्य गिरिसङ्काशं प्रासादं हरियूथपः ।
स बभौ सुमहातेजाः प्रतिसूर्य इवोदितः ॥ 5 43 4

प्रतिसूर्य इत्यनेन उदय इति सिद्धम् । ततो जम्बुमाल्यक्षादिद्विभागबल-संहारः । तत इन्द्रजिद्युद्धम् । रावणदर्शनम् । लङ्कादहनम् । एतत् सर्वमप्युदयानन्तरमेव । तथा—

*रात्रौ यदि न दृष्टा मे दुर्गकर्मविधानतः ।
अवश्यमेव द्रष्टव्या मया लङ्का निशाक्षये ॥ 5 53 15

इति उदयानन्तरं लङ्कादर्शनम् ।

लङ्कां समस्तां सन्दीप्य लाङ्गूलाग्निं महाबलः ।
निर्वापयामास तदा समुद्रे हरिसत्तमः ॥ 5 55 1

इति लङ्कां दग्ध्वा अशोकवनिका दग्धेति बहु तप्त्वा पुनश्चारणवाक्यात् सीतां दृष्ट्वा तया चानुज्ञातस्य समुद्रस्योत्तरतीरं प्राप्य अङ्गदादिभिः कृत-संवादस्य मधुवनमपि भुक्त्वा चतुर्दश्यां सायमेव श्रीरामदर्शनम् । सीतावृत्तान्तनिवेदनं च । एकार्धदिनचरितप्रतिपादकः सुन्दरकाण्डः समाप्तः ।

ततः पूर्णिमायां प्रातः पुनरेकवारं सीतावृत्तान्तकथनम् । लङ्का-वृत्तान्तनिवेदनं च । ज्येष्ठकृष्णप्रतिपदमारभ्य फाल्गुनप्रतिपत्पर्यन्तं कि-ञ्चिन्न्यूनाष्टमाससम्मितो ऋश्यमूकवासः । एतावत्पर्यन्तं वनवासस्य चत्वा-रिंशद्दिनोत्तरदशमासोत्तरत्रयोदशवत्सरा गताः । इतः परं विंशतिदिनकृ-त्यान्युच्यन्ते । पूर्णिमामध्याह्न एव युद्धयात्रारम्भः । सुग्रीवं प्रति राम-वाक्यम्—

न तिष्ठेयं क्षणमपि प्रवृत्तिमुपलभ्य च । 5 66 11
अस्मिन् मुहूर्ते सुग्रीव प्रयाणमभिरोचय ॥
युक्तो मुहूर्तो विजयः प्राप्तो मध्यं दिवाकरः । 6 4 3

---

* रात्रौ न हि सुदृष्टा मे ।

उत्तराफल्गुनी ह्यद्य श्वस्तु हस्तेन योक्ष्यते ॥ 64·6

इति प्रयाणवेलाया फल्गुनीनक्षत्रत्वात् फल्गुनीनक्षत्रयुक्ता पौर्णमासी फल्गुनीति । तदानीं फाल्गुनमासत्वात् फल्गुनीति सिद्धम् । मद्ध्याह्न इत्यत्र–

अभिप्रयाम सुग्रीव सर्वानीकसमावृता । 64·6

इति मद्ध्याह्ने प्रयाणं इति सिद्धम् ।

समायाति दिवारात्र महती हरिवाहिनी । 6 4 70

हृष्टा प्रमुदिता सेना सुग्रीवेण सिपालिता ॥ 6 4 71

वानरास्त्वरिता यान्ति सर्वे युद्धाभिनन्दिन । 6 4 71

प्रमोक्षयिषव सीता मुहूर्त क्वापि नासते ॥ 6 4 72

कुत्रापि न स्थित्वा रात्रिन्दिवमपि गत्वा प्रथमाया माय समुद्रतीर-प्राप्ति । तत्र गत्वा सेना त्रिधा निविष्टा । त्रिधेत्यत्र—वानरा एकत, अन्यत ऋक्षा , अन्यतो लाङ्गूला । तथा–

त्रिधा निविष्टा महती रामस्यार्थपरा भवी । 6·4 111

तत सन्ध्याकालः ।

दिनक्षयान्मन्दरुचिर्भास्करोऽस्तमुपागमत् । 6 5 22

आश्वासितो लक्ष्मणेन राम सन्ध्यामुपासत । 6 5 23

कृष्णपक्षप्रथमात्वात् चन्द्रोदयवर्णनम् ।

चन्द्रोदयसमुद्धूतं प्रतिचन्द्रसमाकुलम् । इति 6 4 114

सन्ध्यावन्दनादिकं कृत्वा सुखेन स्थिति । तदानीमेव विभीषणागमनम् । दर्भास्तरणशयनं च । तथा हि-चतुर्दश्या हनुमत पुन प्रत्यागमनम् । तस्या रावणास्त्विति कर्तव्यतामूढस्तूष्णीं स्थितः । तदानीमेव विभीषणाग-मनम् । पूर्णिमायामेको मन्त्रप्रश्न । तथा सर्वराक्षसान् प्रति रावण-वाक्यम्–

मन्त्रमूलं हि विजयं प्राहुरार्या मनस्विनः । 6-6 5
तस्माद्वै रोचये मन्त्रं रामं प्रति महाबलाः ॥ 6 6 6

इत्यादि । ततः—

ऊचुः प्राञ्जलयः सर्वे रावणं राक्षसेश्वरम् । 6 7 1

इत्यादि । 'नीतिशास्त्रस्त्वबुद्धय.' इत्यादिप्रश्नानुरूपमुत्तरं दत्वा कुमारानेव (कुमारवर्गानेव) प्रोत्साहितवन्तः । तथा—

देवदानवगन्धर्वाः पिशाचपतगोरगाः । 6 8-1
न त्वां धर्षयितुं शक्ताः किं पुनर्वानराधमाः ॥ 6 8 2
सर्वे प्रमत्ता विश्वस्ता वञ्चिताः स्म हनूमता । 6 8 3

इत्यादिसकलराक्षसवाक्यमपि श्रुत्वा

तान् गृहीतायुधान् सर्वान् वारयित्वा विभीषणः ॥
अब्रवीत् प्राञ्जलिर्वाक्यं पुनः प्रत्युपवेश्य तान् । 6 9 7
यावन्न सगजां साश्वां बहुरत्नसमाकुलाम् ।
पुरीं दारयते बाणैर्दीयतामस्य मैथिली ॥ 6-9 18

इत्यादि विभीषणवाक्यमपि श्रुत्वा इतिकर्तव्यतामूढस्सन् अन्तःप्रविष्टः । ततः प्रथमाया प्रातरपि ।

ततः प्रत्युषसि प्राप्ते प्राप्तधर्मार्थनिश्चयः ।
राक्षसाधिपतेर्वेश्म भीमकर्मा विभीषणः ॥ 6-10 1

इति तत्र गत्वा

यदाप्रभृति वैदेही सम्प्राप्तेह परन्तप ।
तदाप्रभृति दृश्यन्ते निमित्तान्यशुभानि नः ॥ 6-10 14

इत्यादि बहूक्तं श्रुत्वा इतिकर्तव्यतामूढस्सन् उपस्थितज्वरस्सन् विभीषणं विसृज्य तदानीमेव सभामण्टपे सर्वराक्षसान् समाहूय तृतीयमन्त्रारम्भः । तथा—

सद्दृ तु सुहृदां मध्ये व्याजहार स रावणः । 6 12 6

इत्यादि ।

कुम्भकर्णस्य सुप्तान्ते समस्त्राथेमचोदयम् । 6 12 10

इत्यादि । स इदानीं समुत्थित इति कुम्भकर्णादिसकलराक्षसान् प्रति—

दुर्ज्ञेयाः कार्यगतयः ब्रूत यस्य यथामति । 6 12 22

इति पृष्टे

तस्य कामपरीतस्य निशम्य परिदेवितम् । 6 12 27

कुम्भकर्णः प्रचुक्रोध वचनं चेदमब्रवीत् ॥ 6 12 28

त्वयेदं महदारब्धं कार्यमप्रतिचिन्तितम् ।

दिष्ट्या त्वाभिवधीत् रामो विषमिश्रमिवामिषम् ॥ 6.12 34

इत्यादि बहूक्त्वा, ततो राज्ञो मतमनुसृत्यैव

अहमुत्सादयिष्यामि शत्रून् तव विशांपते । 6 12 35

इत्यादि कुम्भकर्णादिसकलराक्षसवाक्यं निशम्य विभीषणवचनम्—

निशाचरेन्द्रस्य निशम्य वाक्यं स कुम्भकर्णस्य च गर्जितानि ।

विभीषणो राक्षसराजमुख्यमुवाच वाक्यं हितमर्थयुक्तम् । 6.14.1

इत्यादि—

यावन्न लङ्कां समभिद्रवन्ति वलीमुखाः पर्वतकूटमात्राः । 6 14.3

इत्यादि

यावन्न गच्छन्ति शिरांसि बाणा रामेरिता राक्षसपुङ्गवानाम् ॥

वज्रोपमा वायुसमानवेगाः प्रदीयतां दाशरथाय मैथिली ॥ 6 14 4

इत्यादि हितमुक्तवन्तं विभीषणं बहु दूषितवान् । तथा च—

सुनिविष्टं हितं वाक्यमुक्तवन्तं विभीषणम् ।

अब्रवीत् परुषं वाक्यं रावणः कालचोदितः ॥ इत्यादि । 6 16.1

नित्यमन्योन्यसंहृष्टाः व्यसनेष्वाततायिनः ।

प्रच्छन्नहृदया घोराः ज्ञातयस्तु भयावहाः ॥ 6 16 5

विद्यते गोषु सम्पन्नं विद्यते ब्राह्मणे दमः ।
विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयम् ॥ 6 16 9

इत्यादि बहु दुरुक्तं श्रुत्वा

स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना । 6-16-25

इति रावणं विसृज्य घटिकाद्वयेन श्रीरामसमीपमागतः ।

आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः । 6 17 1
सोऽहं परुषितस्तेन दासवच्चावमानितः ॥

त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः । 6-17 16
सर्वलोकशरण्याय राघवाय महात्मने ॥

निवेदयत मां क्षिप्रं विभीषणमुपस्थितम् । 6 17 17

इति प्रथमायां पूर्वरात्रौ विभीषणागमनम् । रात्रावपीत्यस्य

अदेशकाले संप्राप्तः सर्वथा शङ्क्यतामयम् । 6-17-46

इति जाम्बवद्वाक्यम् । ननु अदेशकाल इत्यस्य शत्रुपक्षप्रयुक्तव्यसनसंयुक्त-
भ्रातृत्यागात् अह काल इत्येवार्थोऽस्तु । तथोत्तरत्र हनुमता 'स एष देशः
कालश्च' इत्यारभ्य

दौरात्म्यं रावणे दृष्ट्वा विक्रमं च तथा त्वयि ।
युक्तमागमनं तस्य सदृशं तस्य बुद्धितः ॥ 6 17 58

इत्येतद्दोषमुक्तत्वादिति चेदुच्यते । पूर्वं जाम्बवद्वाक्यमेव ।

बद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः । 6 17 46

अत्र जन्मप्रभृति बद्धवैरात् परदाराभिमर्शनादिपापयुक्तात् रावणात् व्यसन-
संयुक्तादप्यागमनं युक्तमेव । किं च रात्रावागतश्शङ्क्य इति द्योत्यते ।
तस्माददेशकाल इत्यस्यार्थद्वयेनाप्यूह्यम् । तस्माद्धनुमताऽपि भ्रातृत्यागानर्ह-
काले आगत इति रात्रावागत इति च । * एतद्देशद्वयमपि निराकृत्य

* एतद्दोष

वालिवधसुग्रीवपट्टाभिषेकदृष्टान्तनिवेदनेन रावणवधस्वराज्यप्राप्त्याशया आगत इत्युक्तं भवति । तस्मात्प्रथमाया पूर्वरात्रावागत इति सिद्धम् । सर्ववानरमतमप्यनङ्गीकृत्य हनूमन्मतानुसारेणैव श्रीरामेणाप्यभयप्रदानं दत्तम् ।

विभीषणो वा सुग्रीव यदि वा रावणः स्वयम् ।
आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया ॥ 6.18 34,35

इति । ततो विभीषणमन्त्रनिवेदनम् ।

समुद्रं राघवो राजा शरणं गन्तुमर्हति । 6 19 31

इति निवेदितं श्रुत्वा तत्क्षणमेव दर्भास्तरणशयनादि ।

एवमुक्तः कुशास्तीर्णे तीरे नदनदीपतेः ।
संविवेश तदा रामो वेद्यामिव हुताशनः ॥ 6 19 42,43

तद्रात्रिमारभ्य त्रिरात्रं दर्भास्तरणशयनम् । तथा—

तस्य रामस्य सुप्तस्य कुशास्तीर्णे महीतले ।
नियमादप्रमत्तस्य निशास्तिस्रोऽतिचक्रमुः ॥ 6 21 10

ततः समुद्रे स्वप्रसन्ने श्रीरामस्य कोपघटना । तथा—

चापमानय सौमित्रे शरांश्चाशीविषोपमान् ।
सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः ॥ 6.21 22

इति कोपेन बाणप्रयोगे कृते—

योजनं व्यतिचक्राम वेलामन्यत्र संप्लवात् । 6 22 15

एवं क्रुद्धे सति समुद्रागमनम् ।

ततो मध्यात् समुद्रस्य सागरः स्वयमुत्थितः । 6 22 17
गङ्गासिन्धुप्रभृतिभिरापगाभिः समावृतः ॥ 6 22 24

इत्यागत्य नलेन सेतुं कारयेत्युपायं निवेद्य करं गृहीत्वा गतवति सति, तदानीमेव सेतुबन्धारम्भः । दर्भशयनेन तृतीया गता । चतुर्थ्यां चतुर्दश योजनानि बद्धानि ।

कृतानि प्रथमेनाह्ना योजनानि चतुर्दश । इति । 6-22-68
द्वितीयेन तदा चाह्ना योजनानि तु विंशतिः ॥ 6 22-69

अह्ना तृतीयेन तदा योजनानि कृतानि तु । 6-22 70
त्वरमाणैर्महाकायैरेकविंशतिरेव च ॥

चतुर्थेन तदा चाह्ना द्वाविंशति तथैव च । 6-22-71
योजनानि लयेर्विशत्सुवेलमविकृत्य वै ॥

पञ्चमेन तदा चाह्ना प्लवगैः क्षिप्रकारिभिः । 6 22 72

एवं चतुर्थीमारभ्य अष्टमीपर्यन्त शतयोजनानि बद्धानि । ततस्तेन तीर्त्वा सुवेलप्रान्ते निविष्टाः ।

तीरे विविशिरे रम्ये बहुमूलफलोदके । 6 22 88

एवं सुवेलप्रान्ते स्थितेः । श्रीराम दृष्ट्वा अतिमानुषवाक्यम्—
समुद्रे सेतुबन्धन दृष्ट्वा सकलदेवन पूजनम् । तदा—

तदद्भुत राघवकर्म दुष्करं समीक्ष्य देवाः सह सिद्धचारणैः ।
उपेत्य रामं सहसा महर्षिभिः समभ्यषिञ्चत् सुशुभैर्जलैः पृथक् ॥ 6 22 88

जयस्व शत्रून् नरदेवमर्दनीं ससागरां पालय शाश्वती समाः ।
इतीव रामं नरदेवसत्कृतं शुभैर्वचोभिर्विविधैरपूजयन् ॥ 6 22 89

ततो रावणोऽपि गरुडव्यूहप्रकारेण सेनां संस्थाप्य शुकं विसृज्य सुखेन स्थितः । ततः सेनागणनाय रावणेन प्रेषितौ छद्मचारिणौ विभीषणगृहीतावपि विमोचितौ ।

श्रीरामवाक्यम्—

श्वः काले नगरीं लङ्कां सप्राकारां सतोरणाम् । इत्यादि । 6 25 24
घोरं रोषमहं मोक्ष्ये बलं धारय रावण । 6 25 25
श्वः काले वज्रवान् वज्रं दानवेष्विव वासवः ॥ 6 25 26

त्युक्त्वा तौ प्रेषितौ च गत्वा रावणाय निवेदितवन्तौ । ततः सुवेलारोह-
णम् । तथा—

अध्यारोहामहे सर्वे वत्स्यामोऽत्र निशामिमाम् ।　6-38-3
लङ्कां चालोकयिष्यामो निलयं तस्य रक्षसः ॥ इति ।　6-38-4

ततोऽस्तमगमत् सूर्यः सन्ध्यया प्रतिरञ्जितः ।　6 38 18
पूर्णचन्द्रप्रदीप्ता च क्षपा समभिवर्तते ॥ इति ।　6 38 19

पूर्णचन्द्रप्रदीप्तेत्यत्र पूर्णिमाभ्रान्तिर्न कार्या । सुग्रीवस्य राजराजत्वात्
करदीपवृक्षदीपादिज्योतिः प्रकाशाच्चन्द्रप्रकाशवत् भातीत्यर्थः ।

ततो रामः सुवेलाग्रं योजनद्वयमण्डितम् ।
आरुरोह ससुग्रीवो हरियूथपसंवृतः ॥　6 40 1

एवं सुवेले स्थितः । तदानीं गोपुरशृङ्गस्थं राक्षसेश्वरं दृष्ट्वा अमर्षणतया
सुग्रीवस्तत्र गत्वा कूटमङ्गं कृत्वा सुवेलं पुनरागतः । तथा—

उत्पपात तदाकाशं जितकाशी जितक्लमः ।
रावणः स्थित एवात्र हरिराजेन वञ्चितः ॥　6 40.28

किं च—

अथ हरिवरनाथः प्राप्य संग्रामकीर्तिं
निशिचरपतिमाजौ योजयित्वाश्रमेण ।
गगनमतिविशालं लङ्घयित्वाऽर्कसूनु-
र्हरिवरगणमध्ये रामपार्श्वं जगाम ॥　6 40 29

'तां रात्रिमुषितास्तत्रे'ति रात्रिं तत्रैव स्थिताः । ततो नवम्यां पर्वतादव-　- 39 1
रुह्य तदानीमेव युद्धयात्रारम्भः । तथा–

सोऽवतीर्य तु धर्मात्मा तस्माच्छैलात्स राघवः ।　6 41 2(
कालज्ञो राघवः काले संयुगायाभ्यचोदयत् ॥　6 41 2

ततः काले महाबाहुः . । ..लङ्कामभिमुखः पुरीम् ॥　6 41 2

ततः प्राकारसमीपं गत्वा द्वाराणि सर्वतो निरुद्ध्य, तदानीं राजधर्ममनुसृत्य दूत्येन अङ्गदं प्रेषितवान् । तथा—

विभीषणस्यानुमते राजधर्ममनुस्मरन् । 6 41 60
अङ्गदं प्रेषयामास रामो राजीवलोचनः ॥

एवं तृतीययामानन्तरपर्यन्तं कालक्षेपः कृतः । ततो द्वन्द्वयुद्धारम्भः ।

एतस्मिन्नन्तरे घोरः संग्रामः समपद्यत । 6 42 41
रक्षसां वानराणां च यथा देवासुरे पुरा ॥ 6 42 42

तृतीययामानन्तरमित्यस्य ज्ञापकम् ।

पुनः सुयुद्धं तरसा समास्थिताः
दिवाकरस्यास्तमयाभिकाङ्क्षिणः । इति । 6 43 48

निशाचराणां निशि बलाधिक्यात् निशाऽऽकाङ्क्षितेत्यर्थः । अतः सायङ्काले युद्धारम्भ इति सिद्धम् । अस्तमयानन्तरमपि युद्धं कृतवन्तः ।

युद्ध्यतामेव तेषां तु तदा वानररक्षसाम् ।
रविरस्तंगतो रात्रिः प्रवृत्ता प्राणहारिणी ॥ 6-44 ।

तत्र —

सम्प्रवृत्तं तदा युद्धं हरिराक्षससंकुलम् । 6 44 2
सा बभूव निशा घोरा हरिराक्षसहारिणी ॥ इति । 6 44 16

तद्रात्र्यामेव नागपाशबन्धः । ततो गरुडागमनम् । नागपाशमोक्षणं च । एतच्चार्धरात्रे । तथा पाशविमुक्तौ श्रीरामलक्ष्मणौ दृष्ट्वा—

क्षये निदाघस्य यथा घनानां नादं सुभीमं नदतां निशीथे । 6 50 65

ततस्तदानीमेव धूम्राक्षवधः । वज्रदंष्ट्रवधः । अपररात्र्यां अकम्पनवधश्च । अत्र शङ्क्येत—

अभवत् सुदिने चापि दुर्दिनं रूक्षमारुतम् । 6 55 11

इत्युक्तत्वात् कथमपररात्रमित्युच्यते ।

संवृतानि च रूपाणि ददृशुर्न रणाजिरे । 6 55 20

इति रूपादर्शनस्योक्तत्वात् रात्रिरिति बोध्यते । न च 'आयुधं स्यन्दनं वा 6 55 21
ऽपि ददृशाते न रेणुना' इति रेणुयुक्तमेवास्तु इति ।

हरीनेव सुसंक्रुद्धा हरयो जघ्नुराहवे । 6 55 22
राक्षसाश्चापि रक्षांसि निजघ्नुस्तिमिरे तदा ॥ 6 55 23

इति तिमिरपदं प्रयुक्तवत. ग्रन्थकर्तुश्च रात्रिरित्येवाभिप्रायः । इतरथा
रे(णु?)पदप्रयोगेणैव चारितार्थ्यात् । किं च-'ततस्तु रुधिरौघेण सिक्तं 6-55 24
व्यपगतं रजः' इति रजोऽव्यपगमनानन्तरं प्रकाशस्य अनुच्यमानत्वात् तिमिर-
शब्दप्रयोगाच्च रात्रिरित्येव ग्रन्थकर्तुरभिप्रायः । तथा च 'ततश्चारुणवर्णाभ'- 6 /? 21 above
मित्यरुणोदयवेलेति सूचितं भवति । व्यङ्ग्योक्तिचमत्कारत्वात् काव्यस्य
व्यङ्ग्यप्रधानत्वात् व्यङ्ग्यतया सूचितमित्यलं प्रपञ्चेन ।

अकम्पनवधेन रात्रिर्गता । दशम्यां प्रातः — 6 57

ततस्तु रावणः पूर्वे दिवसे राक्षसेश्वरः । 2
पुरीं परिययौ लङ्कां सर्वान् गुल्मानवेक्षितुम् ॥ 3
रुद्धां च नगरीं दृष्ट्वा रावणो राक्षसाधिपः ॥ 4
उवाचात्महितं काले प्रहस्तं युद्धकोविदम् ॥ 5
अहं वा कुम्भकर्णो वा त्वं वा सेनापतिर्मम ॥ 6
इन्द्रजिद्वा निकुम्भो वा वहेयुर्भारमीदृशम् ॥ 7
आपत् संशयिता श्रेयो न तु निःसंशयीकृता ॥ 11
प्रतिलोमानुलोमं वा यद्वा नो मन्यसे हितम् ॥ 12

इति प्रहस्तं प्रेषितवान् । पूर्वे दिवसे इत्यनेन द्वन्द्वयुद्धात् पूर्वं किल गुल्मा-
वेक्षणं कृतम् । तथा—

रुद्धां च नगरीं दृष्ट्वा जातक्रोधो निशाचरः ।
विधानं द्विगुणं कृत्वा प्रासादं सोऽध्यरोहत । 6 42 2

इति किं च—

स ददर्शावृतां लङ्कां सशैलवनकाननाम् ।
असंख्येयैर्हरिगणैः सर्वतो युद्धकाङ्क्षिभिः ॥ 6 42 1

इति सर्वतो रुद्धां नगरीं दृष्ट्वा अत्यमर्षितया स्थितः ।

तदानीम्—

क्षिप्रमाज्ञापयामास वानरान् द्विषतो वधे ॥ 6 42 9

इति श्रीरामाज्ञया सर्ववानराः—

प्रेक्षतो राक्षसेन्द्रस्य तान्यनीकानि भागशः ।
राघवप्रियकामार्थं लङ्कामारुरुहुस्तदा ॥ इति । 6 42 13

ततो रावणोऽपि—

ततः कोपपरीतात्मा रावणो राक्षसेश्वरः । 6 42 32
निर्याणं सर्वसैन्यानां द्रुतमाज्ञापयत्तदा ॥ 6 42 33

इत्याज्ञप्तवान् । ततः—

रक्षसां वानराणां च द्वन्द्वयुद्धमवर्तत । 6 42 41,42

इति गुल्मावेक्षणानन्तरं हि द्वन्द्वयुद्धादि । तथा च गुल्मावेक्षणप्रहस्तप्रेषणमध्य एव द्वन्द्वयुद्धाकम्पनवधपर्यन्तस्य निर्वर्तितत्वात् । ततः प्रहस्तप्रेषणवेलायाः पूर्वस्मिन् दिवसे गुल्मावेक्षणमित्युक्त्वा गुल्मावेक्षणादिप्रहस्तप्रेषणपर्यन्तमप्येक एव दिवस इति सिद्धत्वात् धूम्राक्षाद्यकम्पनवधपर्यन्तमध्येकैव रात्रिरिति सिद्धम् । अत एव—

मन्त्रं कृत्वा प्रसुप्तोऽयमितस्तु नवमेऽहनि । 6 60 17 (cf. 41)

इति वक्ष्यमाणमपि सङ्गच्छते । तद्यथा—दशम्यां प्रातः प्रहस्तवधः । ततः 'संख्ये प्रहस्तं निहतं निशम्य' इत्यादि । 6.59 3

नावज्ञा रिपवे कार्या यैरिन्द्रबलसूदनः ।
सूदितः सैन्यपालो मे सानुयात्रः सकुञ्जरः ॥ 6 59 4

इत्युक्त्वा

स्वयमेव गमिष्यामि रणशीर्ष तदद्भुतम् ।　　6 59-5

इति रावणागमनम् । रामेण सह युद्धं च । किरीटभङ्ग च ।

शरार्दित कृत्तकिरीटकूटो विवेश लङ्का सहसा स राजा ।　　6 59-144

इति किरीटभङ्गेन लङ्का प्रविष्ट । तत्र मन्त्रिवान् प्रत्यतिखेदतया निवेदनम्—

सर्व तत्खलु मे मोघ यत्तप्त परम तप ।
य समानो महेन्द्रेण मानुषेणास्मि निर्जित ॥　　6 60 5

इति । तत्र अतिभीत सन् कुम्भकर्णं बोधितवान् । तथा–

निद्रामदसमायुक्त कुम्भकर्णो विबोद्ध्यताम ।　　6 60 16
नव षट् सप्त चाष्टौ च मासान् स्वपिति राक्षस ॥　　6 60 17

अत्र षड्डष्टमासानिति इमं पक्षमभिप्रेत्योक्तमिति ज्ञेयम् ।

तथा च वक्ष्यति श्रीराम प्रति विभीषणवाक्यम्–

शयितो ह्येष षण्मासानेकाह जागरिष्यति ।　　6 61 28

इति ब्रह्मणोक्तमिति ।

(p 40) मन्त्र कृत्वा प्रसुप्तोऽयमितस्तु नवमेऽहनि ।　　6 60 17

इति । अत्र प्रथमाया हि मन्त्रकरणम् । तस्यामेव विभीषणागमनम् । दर्भास्तरणशयन च । तद्रात्रिमारभ्य त्रिरात्रं दर्भास्तरणशयनम् । ततश्चतुर्थीमारभ्य अष्टमीपर्यन्तं पञ्चदिने सेतुबन्ध । तद्रात्र्यामेव सुवेलवास. । नवम्या साथ द्वन्द्वयुद्धारम्भ । तद्रात्र्या धूम्राक्षवध । दशम्या प्रात महस्तवध । तदानीमेव किरीटभङ्ग । तत कुम्भकर्णप्रबोधनम् । एव दशदिनेषु सत्सु कथ नवमेऽहनीति चदुच्यते । 'इतस्तु नवमेऽहनि' इत्युक्त्वा दशम्या द(?) नवमेऽहनि द्वितीयाया प्रसुप्त । पूर्वेद्युर्मन्त्रं कृत्वेत्यर्थात् सिद्धम् । तथा 'एकाह जागरिष्यती'त्यत्र एकाह रात्रिन्दिवसमिति ज्ञेयम् । तथा च प्रथमाया रात्रिन्दिवसमपि स्वात् द्वितीयाया प्रात

रेव सुप्तः । तस्मात्त्वमेऽहनीति वक्तुं सुकरम् । ततः कुम्भकर्णस्तु प्रबुद्धः सन् रावणगृहमागत्य तेन च संवादं कृत्वा तेन चानुज्ञातः सन् बहिर्निवर्त्य घटिकाद्वये युद्धं कृत्वा हतः ।

वृत्तं तु प्रशान्तो रामतेजसा ।

गण्डभूतो विभूतो इति ।

मुहूर्तद्वयमित्यस्य घटिकाद्वयमित्यर्थः । 'मुहूर्तमल्पकालः स्यात् घटिका-द्वयशोभितः' मित्यमरः । ततस्त्रिशिरो देवान्तकनरान्तकादिपण्णां कुमाराणां दिवा पञ्चविंशघटिकाया अर्वागेव वधः । तत इन्द्रजिद्युद्धमासायम् ।

ततः—

सप्तषष्टिर्हता कोट्यो वानराणां तरस्विनाम् ।
अह्नः पञ्चमशेषेण वल्लभेन स्वयम्भुवः ॥ 6 74.12

इत्येव वानरान् हत्वा श्रीरामलक्ष्मणावपि ब्रह्मास्त्रेण अवबद्धय

विषादयित्वा महया विवेश पुरीं दशग्रीवभुजाभिगुप्ताम् ॥ 6 73 74

इति लङ्कां प्रविष्टः । ततः अस्तमयानन्तरं

तावुभौ युगपद्वीरौ हनुमद्राक्षसोत्तमौ ।
उल्काहस्तौ तदा रात्रौ रणभूमौ विचेरतुः ॥ 6 74 7

ततो जाम्बवद्वचनात् तदानीमेव ओषधिपर्वतानयनम् । अतिशीघ्रतया गमनागमनम् । तथा—

जवेन महता युक्तो मारुतिर्मारुतो यथा । इति । 6.74.55

किं च-

स्मरन् जाम्बवतो वाक्यम् मारुतिर्वातरंहसा । इति । 6.74 56

किं च बलपरीक्षार्थं युद्धायागतान् देवादीन् तिरस्कृत्य हतः ।

उत्पात्य समुत्पपात विलास्य लोकान् ससुरासुरेन्द्रान् ।
सम्स्तूयमानः खचरैरनेकैर्जगाम वेगात् गरुडाग्रवीर्यवान् ॥ 6 74 68

इत्यानीय सर्वेषां जीवनानन्तरं तदानीमेव यथास्थानानयनम् । तथा—

ततो हरिर्गन्धवहात्मजस्तु महौषधीः शैलमुदग्रवीर्यः ।
निनाय वेगाद्धिमवन्तमेव पुनश्च रामेण समाजगाम ॥ इति । 6 74 77

एतत्सर्वमपि पूर्वरात्रावेव । एवमतिशीघ्रतया कथमागतवानिति शङ्कनीयम् । हनूमतस्तु मनसोऽप्यधिकवेगत्वात् युज्यते । तथोत्तरत्रापि लक्ष्मणे शक्त्याहते—

कालात्ययेन दोषः स्यात् वैक्लव्यं च महद्भवेत् ।
इति सञ्चिन्त्य हनुमान् क्षिप्रं गत्वा महाबलः ॥ इति । 6 102 28

किं च—

कृत्वा तु हनुमत्कर्म सुरैरपि सुदुष्करम् । 6 102·35

इति तदानीं युद्धमध्ये कालात्ययस्य अवकाशाभावादिति ।
क्षिप्रं गतमित्येव वक्तव्यम् । तद्वदत्रापि समम् । अत्र—

स भास्कराध्वानमनुप्रपन्नस्तं भास्करामं शिखरं प्रगृह्य ।
बभौ तदा भास्करसन्निकाशो रवेः समीपे प्रतिभास्कराभः ॥ 6 74·69

गन्धेन तासां प्रवरौषधीनां सुप्ता निशान्तेष्विव संप्रबुद्धाः । 6 74 74

इत्यनेन उदयानन्तरमिति न शङ्कनीयम् । यद्युदयानन्तरं स्यात् तर्हि कुम्भनिकुम्भयोर्युद्धमपि रात्रौ वर्ण्यते । तच्चैकादश्यां रात्राविति वक्तव्यं चेत् तथा च सति अहोरात्रैस्त्रिभिर्वीरत्यस्य विरोधः । त्रयोदश्यां रात्रावेव इन्द्रजिद्वधस्य वक्ष्यमाणत्वात् । तस्मात् दशम्यां रात्रावेव कुम्भनिकुम्भयोर्वध इति वक्तव्यम् । एतत्पूर्वं किल ओषधिपर्वतानयनम् । प्रतिभास्कर इत्यत्र हनुमत्पर्वतयोः पिशङ्गवर्णत्वात् सूर्यस्य समीपे प्रतिसूर्य इवेत्यमूतोपमेति मन्तव्यम् । 'निशान्तेष्विव संप्रबुद्धा' इत्यत्रापि यथा रात्रौ सुप्ताः 6 74 74
प्रातरुत्तिष्ठन्ते तद्वदुत्तिष्ठन्त इति ओषधीनां माहात्म्यं प्रकटीकृतमिति

मन्तव्यम् । तस्माद्दशम्या रात्रावेव ओषधिपर्वतानयनं सर्ववानरजीवनं चेति सिद्धम् । तर्हि-

ततोऽस्तङ्गत आदित्ये रौद्रे तस्मिन्निशामुखे ।
लङ्कामभिमुखाः सोल्का जग्मुस्ते प्लवगर्षभाः ॥ 6 75 4

इत्यत्र निशामुखे जग्मुरित्येतत् कथमिति चेत् हनुमतो वेगवत्तातिशयसूचनार्थमिति ज्ञेयम् । तथा रामानुजीयकृतावप्येवमेव व्याख्यातम् । तथा निशामुखे निशायाः पूर्वभागे सन्ध्याकालानन्तरं प्रथमौषधिपर्वतमानीय पुनस्तत्र निक्षिप्यागते हनुमन्तं प्रति सुग्रीववचनम् ।

यतो हतः कुम्भकर्णः कुमाराश्च निषूदिताः ।
नेदानीमुपनिर्हारं रावणो दातुमर्हति ॥ 6 75 2

इति । पुत्रवधेन भ्रातृवधेन च भीतः सन् नागमिष्यतीत्यर्थः । तस्मात्—

ये ये महाबलाः सन्ति लघवश्च प्लवङ्गमाः ।
लङ्कामभ्युत्पतन्त्वाशु गृह्योल्काः प्लवगर्षभाः ॥ 6 75 3

इति राक्षसनिर्गमनार्थं लङ्कादहनम् । ततः कुम्भनिकुम्भादिनिर्गमनम् । एतच्च विंशतिघटिकातः परमिति ज्ञेयम् । तथा—

चन्द्राभा भूषणाभा च गृहाणां ज्वलिता च भा । 6 75 51

इति दशम्या विंशतिघटिकातः परमेव चन्द्रोदयः । तद्वात्रिशेषेण कुम्भादिवधः । मकराक्षवधश्च । तत एकादश्यामिन्द्रजिदागमनम् । तथा—

स तु वैहायसं प्राप्य सरथो रामलक्ष्मणौ ।
अचक्षुर्विषये तिष्ठन् विव्याध निशितैः शरैः ॥ 6 80 22

तदानीं लक्ष्मणवाक्यम्—

ब्रह्मास्त्रं संप्रयोक्ष्यामि वधार्थं सर्वरक्षसाम् । 6 80.37
अराक्षसमिमं लोकं करिष्यामि महाबल ॥

इति । तं प्रति रामवाक्यम् ।

नैकस्य हेतो रक्षांसि पृथिव्यां हन्तुमर्हसि ।      6 80 38
अयुद्ध्यमानं प्रच्छन्नं प्राञ्जलिं शरणागतम् ॥
पलायन्तं प्रमत्तं वा न त्वं हन्तुमिहार्हसि ।      6 80 39
अस्यैव निधने युक्तं करिष्यावो महाबल ॥      6. 80 40

यद्येष भूमिं विशते दिवं वा रसातलं चाऽपि नभःस्थलं वा ।
एवं निगूढोऽपि ममास्त्रदग्धः शयिष्यते भूमितले गतासुः ॥      6 80 42

इति । रामवाक्यं श्रुत्वा लङ्कां प्रविष्टः । तथा —

विज्ञाय तु मनस्तस्य राघवस्य महात्मनः ।
संनिवृत्याहवात्तस्मात् प्रविवेश पुरीं ततः ।      6. 81 1

तदानीमेव पश्चिमद्वारे निर्गमनम् । तथा —

सोऽनुस्मृत्य वधं तेषां राक्षसानां * बलीयसाम् ।      6 81 2
स पश्चिमेन द्वारेण निर्ययौ राक्षसैर्वृतः ॥      6 81 3

ततो मायासीतावधः ।

मोहनार्थं तु सर्वेषां बुद्धिं कृत्वा सुदुर्मतिः ।
इन्द्रजित्तु रथे स्थाप्य सीतां मायामयीं ततः ॥      6 81 6
शितधारेण खड्गेन निजघानेन्द्रजित्स्वयम् ॥      6 81 31

इति मोहयित्वा निकुम्भिलां प्रविष्टः । तथा —

स तु प्रेक्ष्य हनूमन्तं व्रजन्तं यत्र राघवौ ।      6 82 24
स होतुकामो दुष्टात्मा गतश्चैत्यनिकुम्भिलाम् ॥      6 82 25

ततो हनुमता निवेदितसीतावृत्तान्तः सन् मोहं नाटयित्वा विभीषणवाक्येन पुनः प्रकृतिस्थः सन् विभीषणेन सह लक्ष्मणं इन्द्रजिद्वधाय निकुम्भिलां प्रेषितवान् । तथा —

* तरस्विनामिति कोशेषु पाठः ।

विभीषणेन सहितो राजपुत्रः प्रतापवान् ॥ 6 85 30

कृतस्वस्त्ययनो भ्राता लक्ष्मणस्त्वरितो ययौ । 6 85-31

इति । गत्वा उभयोरपि त्रिरात्रं युद्धम् । तथा एकोननवतितमे सर्गे—

तयोरथ महान् कालो व्यत्ययाद्युद्ध्यमानयोः । 6 89 27

इत्येको दिवसः । एकादशी गता । (पुनश्च तस्मिन्नेव सर्गे) द्वादश्यपि गता । त्रयोदश्या रात्रौ रथानयनाय लङ्का प्रविष्ट । तदानीं राक्षसान् प्रति इन्द्रजिद्वाक्यम्—

तमसा बहुलेनेमाः संसक्ताः सर्वतो दिशः ।

नेह विज्ञायते स्वो वा परो वा राक्षसोत्तमाः ॥ इति । 6 91 5

अहं तु रथमास्थाय आगमिष्यामि सयुगम् ॥ 6 91 6

त्रयोदश्यामर्धरात्रे रथानयनम् । तदपररात्र इन्द्रजिद्वध ।

हतस्तु निपपाताशु धरण्यां रावणात्मज । 6 91 77

इति त्रिदिनानि । तथा श्रीरामवाक्यम्—

अहोरात्रैस्त्रिभिर्वीर कथञ्चिद्विनिपातितः ।

निरमित्र कृतोऽस्म्यद्य निर्यास्यति हि रावण ॥ 6 92 16

ततश्च चतुर्दश्युदयकाले रावण प्रति सुपार्श्ववचनम्—

अभ्युत्थानं त्वमद्यैव कृष्णपक्षे चतुर्दशीम् । 6 93 65

कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः ॥ 6 93 66

इति । सुपार्श्ववचनं श्रुत्वा अशोकवनिकाया आगत्य मूलबलं प्रति रावणवाक्यम्—

सर्वे भवन्त सर्वेण हस्त्यश्वेन समावृताः । 6 94 3

एकं रामं परिक्षिप्य समरे हन्तुमर्हथ ॥ 6.94.4

अथ वाऽहं शरैस्तीक्ष्णैर्भिन्नगात्रं महारणे ।

भवद्भिः श्वो निहन्ताऽस्मि रामं लोकस्य पश्यतः ॥ 6 94 5

the writer has omitted —
तमसा प्रज्ञं प्रज्ञं ... ।

उदयानन्तरमेव मूलबलयुद्धम् । तथा–

स सङ्ग्रामो महाभीमः सूर्यस्योदयनं प्रति ।	6·94·8
रक्षसां वानराणां च तुमुलः समपद्यत ॥	6 94 9

तदानीं मूलबलसङ्ख्या–

अनीकं दशसाहस्रं रथानां वातरंहसाम् ।	6 94
अष्टादश सहस्राणि कुञ्जराणां तरस्विनाम् ॥	31

चतुर्दश सहस्राणि सारोहाणां च वाजिनाम् ।
पूर्णं शतसहस्रं द्वे राक्षसानां पदातिनाम् ॥	32

दिवसस्याष्टमं भागं शरैरग्निशिखोपमैः ।
हतान्येकेन रामेण रक्षसां क्रूरकर्मणाम् ॥	33

अत्र सङ्ख्या क्रियते । सप्ताशीतिलक्षोत्तरैकविंशतिकोटयो रथाः । षट्सहस्रोत्तरषट्त्रिंशल्लक्षोत्तरनवत्रिंशत्कोटयो गजाः । अशीतिसहस्रोत्तरएकषष्टिलक्षोत्तरषट्त्रिंशत्कोटयो वाजिनः । चत्वारिंशल्लक्षोत्तरसप्तत्रिंशत्कोट्युत्तरचतुश्शतकोटयः पदातयः । एतत्सर्वं चतुरङ्गबलमपि चतुर्दश्युदयानन्तरं दिवसस्याष्टमांशे घटिकाचतुष्टयकालमध्ये श्रीरामेण नाशितम् । सङ्ख्याक्रमस्त्वेवं कथं कृत इति चेत् अमरकोशोक्तं वर्तते । तथा हि –

'एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ।
पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।
अनीकिनी दशानीकिन्यक्षौहिण्यथ सम्पदि ॥'

इत्यमरः । अस्यार्थः । एको रथः । एको गजः । अश्वास्त्रयः । पदातयः पञ्च । एतच्चतुरङ्गबलसमुदायस्य पत्तिरिति संज्ञा । एतत्त्रिगुणीकृतं सेना-

मुखमिति । तथा हि-सेनामुखस्य रथास्त्रयः । इभास्त्रयः । अश्वास्तु नव । पदातयः पञ्चदश । एतच्चतुष्टयसमुदायस्सेनामुखम् । एतत्त्रिगुणितं च गुल्ममिति । गुल्मत्रिगुणो गणः । गणात्त्रिगुणा वाहिनी । वाहिनीत्रिगुणा पृतना । पृतनात्रिगुणा चमूः । चमूत्रिगुणा त्वनीकिनी । अनीकिन्यनीकमिति पर्यायः । अनीकस्य सङ्ख्या क्रियते । सप्ताशीत्युत्तरैकशतोत्तरद्विसहस्रसङ्ख्याता रथाः, एवं गजाश्च । एकषष्ट्युत्तरपञ्चशतोत्तरषट्सहस्रसङ्ख्यातास्तुरगाः । पञ्चत्रिंशदुत्तरनवशतोत्तरदशसहस्रसङ्ख्याता पदातयः । अनीकदशसहस्राणीत्यत्र इयमेव सङ्ख्या विवक्षिता । न चानीकान्तःप्रविष्टचतुष्टयबलानां सङ्ख्या । प्रत्येकं विभज्य अत्रानीकचतुष्टयबलानां (सङ्ख्या) तत्सङ्ख्येति भेदः । अनीकमध्यपतितचतुष्टयबलसमुदायसङ्ख्या कविना विवक्षिता । अनीकमिति प्रत्येकमन्वयः । तथा च अष्टादशसहस्राण्यनीकमिति विभक्तिव्यत्ययः । एवं चतुर्दशसहस्राण्यनीकमिति पूर्णे द्वे शतसहस्रे अनीके इति प्रत्येकमूहः कार्यः । एतत्सर्वं मोहनास्त्रेण नष्टम् । तथा—

न ते ददृशिरे रामं दहन्तमरिवाहिनीम् ।
मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ 6 94 26

इति । तथा श्रीरामवाक्यमपि—

अब्रवीच्च तदा रामः सुग्रीवं प्रत्यनन्तरम् ।
एतदस्त्रबलं दिव्यं मम वा त्र्यम्बकस्य वा ॥ 6 94 38

ततो लङ्कानिवासिनां राक्षसानामतिदुःखतया, तद्दिवसशेषमपि रात्रिमपि युद्धं न । तथा—

आर्तानां राक्षसीनां तु लङ्कायां वै कुले कुले ।
रावणः करुणं शब्दं शुश्राव परिदेवितम् ॥ 6 96 1

ति । ततस्त्वमावास्यायां रावणनिर्गमनम् ।

तत प्रजवनाश्वेन रथेन स महाबल ।
द्वारेण निर्ययौ तेन यत्र तौ रामलक्ष्मणौ ॥ 6 96 39

त. रावणयुद्धं शक्त्याऽभिहतलक्ष्मणार्थं ओषधिपर्वतानयनानन्तर-नदानीं
देवे पञ्चविंशतिघटिकेति द्योत्यते । तथा श्रीरामं प्रति लक्ष्मणवाक्यम्—

अह तु वधमिच्छामि शीघ्रमस्य दुरात्मन ।
यावदस्तं न यात्येष कृतकर्मा दिवाकर ॥ 6 102 46

ति तत्मायन्तने मातलिरथानयनम् । तथा—

भूमिस्थितस्य रामस्य रथस्थस्य च रक्षस । 6 103 5
न समं युद्धमित्याहुर्देवगन्धर्वदानवा ॥
तेषां तद्वचनं श्रुत्वा इन्द्रो मातलिमब्रवीत्
शक्तिशूलधनुर्बाणसर्वायुधसमन्वितम् ॥
रथमारुह्य गच्छ त्वं राघवस्य जयाय मे ।
इत्युक्तो देवराजेन मातलि शक्रसारथि ॥ इत्यादि
देवराजेन सन्दिष्टो रथमारुह्य मातलि ।
अभ्यवर्तत काकुत्स्थमवतीर्य त्रिविष्टपात् ॥ 6 103 9
अब्रवीच्च तदा रामं सप्रतोदो रथे स्थित । इत्यादि । 6 103 10
इत्युक्तस्तु परिक्रम्य रथं तमभिवाद्य च ।
आरुरोह तदा रामो लोकान् लक्ष्म्या विराजयन् ॥ 6 103 14

तदानीं स्वामिनोऽष्टमे त्वङ्गारक । तथा—

कोसलानां च नक्षत्रं व्यक्तमिन्द्राग्निदैवतम् ।
आक्रम्याङ्गारकस्तस्थौ विशाखामपि चाम्बरे ॥ 6 103 33

रावणस्य जन्मनि केतु. । मूलनक्षत्रस्य राक्षसदेवताकत्वात् सामान्यकाल ।
तथा—

[नैर्ऋतं नैर्ऋतानां च नक्षत्रमतिपीड्यते । 64
मूलो मूलवता स्पृष्टो धूप्यते धूमकेतुना ॥ इति ।] 52-53

शस्त्रवर्णः सुपुरुषो मन्दरश्मिर्दिवाकरः ।
अदृश्यत कबन्धाङ्कः संसक्तो धूमकेतुना ॥ इति । 6·103 32

तत्र प्रथमायामरुणोदयवेलायां आदित्यहृदयोपदेशः ।

तथा—

रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम् ।
पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥ 6 107·6

अत्र समुद्यन्तमित्यनेनारुणोदय इति सिद्धम् । तदानीं बाहुयुद्धम् । तथा—

गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥ 6 110 23-24

स्वस्ति गोब्राह्मणेभ्योऽस्तु लोकास्तिष्ठन्तु शाश्वताः ।
जयतां राघवः संख्ये रावणं राक्षसेश्वरम् ॥ 6 110 21

एवं जपन्तो ददृशुस्तद्युद्धं रोमहर्षणम् । 6 110 22

दिवारात्रमपि युद्धमेव । तथा—

नैव रात्रं न दिवसं न मुहूर्तं न च क्षणम् ।
रामरावणयोर्युद्धं विराममुपपद्यते ॥ 6·110 38

एवं युद्धे—

सन्धाय धनुषा रामः शरमाशीविषोपमम् ।
रावणस्य शिरोऽच्छिन्दत् श्रीमज्ज्वलितकुण्डलम् ॥
6 110 25-26

इति शिरश्छेदः ।

तच्छिरः पतितं भूमौ दृष्टं लोकैस्त्रिभिस्तथा ।
तस्यैव सदृशं चान्यत् रावणस्योत्थितं शिरः ॥
6 110·26-27

तत्क्षिप्तं क्षिप्रहस्तेन रामेण क्षिप्रकारिणा ।

द्वितीयं रावणशिरश्छिन्नं रामेण सायकैः ॥ 6 110 · 27–28

'एवमेकशतं छिन्नं'मिति एकोत्तरशतावृत्तिच्छेदेऽपि रावणक्षये न दृष्टे 6 110·29

'मारीचो निहतो यैस्तु'इत्यारभ्य– 6 110 31

त इमे सायकाः सर्वे युद्धे प्रत्यायिका मम ।

किं नु तत्कारणं येन रावणे मन्दतेजसः ॥ 6 110·33

'इति चिन्तापरश्चासीत्' इति चिन्ताविष्टं श्रीरामं प्रति मातलिवाक्यम्— 6 110·34

दशरथसुतराक्षसेन्द्रयोस्तयोर्जयमनवेक्ष्य रणे पराजयं च ।

सुरवररथसारथिर्महात्मा रणगतराममुवाच वाक्यमाशु ॥ 6· 110 39

विसृजास्मै वधाय त्वमस्त्रं पैतामहं प्रभो ।

विनाशकालः कथितो यः सुरैः सोऽद्य वर्तते ॥ 6 111 2

मातलिवाक्यश्रवणानन्तरं ब्रह्मास्त्रविसर्जनम् । रावणवधश्च । तथा—

चिक्षेप परमायत्तस्तं शरं मर्मघातिनम् । इति । 6 111· 16

गतासुर्भीमवेगस्तु नैर्ऋतेन्द्रो महाद्युतिः ।

पपात स्यन्दनात् भूमौ वृत्रो वज्रहतो यथा ॥ इति । 6·111 22

रावणयुद्धं त्वेकदिनम् । तथा—

देवदानवयक्षाणां पिशाचोरगरक्षसाम् ।

पश्यतां तन्महद्युद्धं सर्वरात्रमवर्तत ॥ इति । 6 111 37

सर्वरात्रमित्यस्य दिवारात्रमपि नैरन्तर्येण ज्ञातव्यमित्यर्थः । ततो विभीषण-विलापः ।

भ्रातरं निहतं दृष्ट्वा शयानं रामनिर्जितम् ।

शोकवेगपरीतात्मा विललाप विभीषण ॥ इति । 6·112 1

ततो मन्दोदरीप्रलापः ।

पतिं मन्दोदरी तत्र कृपणा पर्यदेवयत् । 6· 114·2

ततो रावणसत्कारः ।

ददौ च पावकं तस्य विधियुक्तं विभीषणः ।
स्नात्वा चैवार्द्रवस्त्रेण तिलान् दर्भाभिमिश्रितान् ॥ 6 114 112
उदकेन च सम्मिश्रान् ददौ स विधिपूर्वकम् । इत्यादि ।
6 114 113

इत्याद्यतत्सर्वं प्रथमायाम् ।

एकाहाच्छुद्ध्यते विप्रो योऽग्निवेदसमन्वितः ।
त्र्यहात् केवलवेदस्तु विहीनो दशभिर्दिनैः ॥

द्वितीयायां विभीषणपट्टाभिषेकः ।

घटेन तेन सौमित्रिरभ्यषिञ्चद्विभीषणम् ।
लङ्कायां रक्षसां मध्ये राजानं रामशासनात् ॥ 6 115 14-15

तृतीयायां सीताशोधनं ब्रह्मस्तुतिश्च ।

भवान्नारायणो देवः श्रीमान् चक्रायुधः प्रभुः ।
एकशृङ्गो वराहस्त्वं ॥ इत्यादि ।
6 120 13-14

पित्रा समागमः ।

लक्ष्मणेन सह भ्रात्रा ददर्श पितरं विभुः । इत्यादि ।
6 122 10

चतुर्थ्यां प्रातः ।

तां रात्रिमुषितं रामं सुखे स्थितमरिन्दमम् । 6 124
अब्रवीत् प्राञ्जलिर्वाक्यं जयं पृष्ट्वा विभीषणः ॥ 1

स्नानानि चाङ्गरागाणि वस्त्राण्याभरणानि च ।
चन्दनानि च दिव्यानि माल्यानि विविधानि च ॥ 2
अलङ्कारविदश्चैता नार्यः पद्मनिभेक्षणाः ।
उपस्थितास्त्वां विधिवत् स्नापयिष्यन्ति राघव । 3
एवमुक्तस्तु काकुत्स्थः प्रत्युवाच विभीषणम् ॥ 4

हरीन् सुग्रीवमुख्यांस्त्वं स्थानेनाभिनिमन्त्रय । इत्यादि ततः सेना-
बहुमानं च । तथा— 6.124 5

एवमुक्तस्तु रामेण वानरांस्तान् विभीषणः ।
रत्नार्थसंविभागेन सर्वानेवान्वपूजयत् ॥ 6 125.10

ततः पुष्पकारोहणम् ।

आरुरोह ततो रामस्तं विमानमनुत्तमम् ।
अङ्केनादाय वैदेहीं लज्जमानां यशस्विनीम् ॥ 6.125 11-12

ततः सकलवानरराक्षसारोहणम् ।

ततस्तत्पुष्पकं दिव्यं सुग्रीवः सह सेनया ।
अध्यारोहत्तदा शीघ्रं सामात्यः सविभीषणः ॥ 6 125 24-25

ततः पुष्पकगमनम्—

* अनुज्ञातं तु रामेण तद्विमानमनुत्तमम् ।
हंसयुक्तं महानादमुत्पपात विहायसम् ॥ इति ।

ततः किष्किन्धापुरप्राप्तिः ।

एषा सा दृश्यते सीते किष्किन्धा चित्रकानना । इति । 6 126 17
किष्किन्धायां चतुर्थी । पञ्चम्यां प्रातः सर्ववानरयोषितां विमानारोहणम् ।

* तेष्वारूढेषु सर्वेषु कौबेरं परमासनम् । 6 125 25
राघवेणाभ्यनुज्ञातमुत्पपात विहायसम् ।
ययौ तेन विमानेन हंसयुक्तेन भास्वता ॥ 6 125 26

अनन्तरसर्गे तु—

'अनुज्ञातं तु रामेण तद्विमानमनुत्तमम् ।
उत्पपात महामेघः श्वसनेनोद्धतो यथा ॥ ' 6 126 1

इति प्रथमश्लोकः पठ्यते ।

तथा — 6 126

तारया चाभ्यनुज्ञाताः सर्ववानरयोषितः ।
नेपथ्यं विधिपूर्वेण कृत्वा चापि प्रदक्षिणम् ॥ 31
अध्यारोहन् विमानं तत् सीतादर्शनकांक्षया । 32

ततो भरद्वाजाश्रमप्राप्तिः ।

पूर्णे चतुर्दशे वर्षे पञ्चम्यां रघुनन्दनः ।
भरद्वाजाश्रमं प्राप्य ववन्दे प्रयतो मुनिम् ॥ 6 127 1

इति पञ्चम्यां चतुर्दश वर्षाणि पूर्णानि । अयोध्यातो निर्गमनमपि पञ्चम्यामेव हि । तदानीमेव —

चतुर्दशे हि सम्पूर्णे वर्षेऽहनि रघूत्तम । 2 112
न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम् ॥ इति । 25-26

पूर्वं भरतोक्तवाक्यस्य, 'तथेति च प्रतिज्ञाय तं परिष्वज्य सादरम् ।' इति 2 112 26
प्रत्युक्तवाक्यस्य परिपालनार्थं स्वदर्शनतुल्यं स्ववृत्तान्तनिवेदनमिति हनुमन्मुखेरितं कारितम् । तथा हनुमन्तं प्रति —

भरतस्तु त्वया वाच्यः हनुमन् वचनान्मम । इति । 6 128 5

तथा हनुमता विनिवेदितम् । भरतं प्रति —

उवाच प्राञ्जलिर्वाक्यं हनुमान् मारुतात्मजः । 34
वसन्तं दण्डकारण्ये यं त्वं चीरजटाधरम् ॥

अनुशोचसि काकुत्स्थं स त्वां कुशलमब्रवीत् । 35
इति श्रुत्वा महाराजो बहुमानमथाकरोत् ॥

शतं सहस्रं धेनूनां ग्रामाणां च परं शतम् ।
सकुण्डलाः शुभाचारा वराः कन्यास्तु षोडश ॥ 43

इति । श्रीरामस्य पञ्चम्यां भरद्वाजाश्रमवासः । तथा —

अर्घ्यं प्रतिगृहाणेदमयोध्यां श्वो गमिष्यसि ।
तस्य तच्छिरसा वाक्यं प्रतिगृह्य नृपात्मज ॥ 6 127 17

इति । किं च गुहं प्रत्यपि—

षष्ठ्यां भरत. समागतः । तथा भरत प्रति हनुमद्वाक्यम्—

अविघ्नं पुष्ययोगेन श्वो रामं द्रष्टुमर्हसि । इति । 6 129 53
पञ्चमीमद्य रजनीमुषित्वा वचनान्मुने. । 6 128 22

इति । तस्मात् षष्ठ्यामेव नन्दिग्रामप्रवेश ।

ततो विमानाग्रगतं भरतो भ्रातरं तथा ।
ववन्दे प्रयतो रामं मेरुस्थमिव भास्करम् ॥ 6-130 36-37

इति । नन्दिग्रामं प्राप्य विमानविसर्जनम्—

वह वैश्रवण देवमनुजानामि गम्यताम् । 6·130 60

इति । ततो जटापरिहारः ।

तत शत्रुघ्नवचनान्निपुणाः श्मश्रुवर्धकाः ।
सुखहस्ताः सुशीघ्राश्च राघव पर्युपासत ॥ 6 131·13

ततः सर्वालङ्कारः ।

प्रतिकर्म च रामस्य कारयामास वीर्यवान् ।
लक्ष्मणस्य च लक्ष्मीवानिक्ष्वाकुकुलवर्धनः ॥ 6 131 16

इत्यादि । ततः सर्वनगरालङ्कारः ।

शोभयन्तु च वेश्मानि सूर्यस्योदयनं प्रति ।
स्रग्दाममुक्तापुष्पैश्च सुगन्धैः पञ्चवर्णकै ॥ 6 1:0 8

इति । तत. सायन्तने अयोध्याप्रवेशः—

प्रययौ रथमास्थाय रामो नगरमुत्तमम् । इति । 6 131 27

एवं वानराश्च ।

नव नागसहस्राणि ययुरास्थाय वानराः । 6 131. 32

इति यथा निरुक्तम्। ततः—

पितुर्भवनमासाद्य प्रविश्य च महात्मनः।
कौसल्यां च सुमित्रां च कैकेयीं चाभ्यवादयत्॥ 6 । 31 44

इति राज्ञो गृहप्रवेशः। तथा सुग्रीवप्रेषकौ यन्निवेदत वेलाया—

ततस्तैलप्रदीपांश्च पर्यङ्कास्तरणानि च।
गृहीत्वा विविशुः क्षिप्रं शत्रुघ्नेन प्रचोदिताः॥ 6 । 31 47

इत्यत्र दीपशब्दश्रवणात् रात्रिरिति सिद्धम्। तदानीं सुग्रीवं प्रति भरत-वाक्यम्—

अभिषेकाय रामस्य दूतानाज्ञापय प्रभो। 6 । 31 48

इति श्रुत्वा सुग्रीवोऽपि—

सौवर्णान् वानरेन्द्राणां चतुर्णां चतुरो घटान्।
ददौ क्षिप्रं स सुग्रीवः सर्वरत्नविभूषितान्॥ 6 । 31 49

इति। सप्तम्यामभिषेकः। षष्ठ्यां रात्रौ—

यथा प्रत्यूषसमये चतुर्णां सागराम्भसाम्।
पूर्णैर्घटैः प्रतीक्षध्वं तथा कुरुत वानराः॥ 6 । 31 50

तथा तैरप्यानीतम्। सर्वनदीजलमप्यानीतम्।

नदीशतानां पञ्चानां जलं कुम्भैरुपाहरन्। 6 । 31 53

इत्येव सर्वजलान्यानीतानि।

ततस्तद्वानरश्रेष्ठैरानीतं प्रेक्ष्य तज्जलम्। इति। 6 । 31 57

तत सप्तम्यामुदयानन्तरं पुष्यनक्षत्रे गुरुवासरे अभिजिद्वेलायां श्रीरामपट्टाभिषेकः।

ततस्स प्रयतो वृद्धो वसिष्ठो ब्राह्मणैः सह।
रामं रत्नमये पीठे सहसीतं न्यवेशयत्॥ इति। 6 । 31 59

ततः— अभ्यषिञ्चन्नरव्याघ्रं प्रसन्नेन सुगन्धिना।
सलिलेन सहस्राक्षं वसवो वासवं यथा॥ 6 । 31 61

तदानीम्—  6 131

छत्रं तु तस्य जग्राह शत्रुघ्नः पाण्डुरं शुभम् ।
श्वेतं च वालव्यजनं सुग्रीवो वानरेश्वरः ॥ 68
अपरं चन्द्रसङ्काशं राक्षसेन्द्रो विभीषणः । 69

किं च—

प्रजगुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः । 71
अभिषेके तदर्हस्य तदा रामस्य धीमतः ॥
भूमिः सस्यवती चैव फलवन्तश्च पादपाः । 72
गन्धवन्ति च पुष्पाणि बभूवू राघवोत्सवे ॥ 73

इति श्रीवेङ्कटार्यकृतौ श्रीरामायणसारसंग्रहे
अर्धदिनोत्तरद्वाविंशद्दिनसमितो
युद्धकाण्डः समाप्तः ।

मैथिलीसमेतश्रीराघवाय नमः ।